# सर्वं ब्रह्ममयं

सर्वं ब्रह्ममयं रे रे ॥

किं वचनीयं किमवचनीयं ।
किं रसनीयं किमरसनीयम् ॥ १
किं पठनीयं किमपठनीयं ।
किं भजनीयं किमभजनीयम् ॥ २
किं बोद्धव्यं किमबोद्धव्यं ।
किं भोक्तव्यं किमभोक्तव्यम् ॥ ३
सर्वत्र सदा हंस ध्यानं ।
कर्तव्यं भो मुक्ति-निदानम् ॥ ४

सर्वं ब्रह्ममयं रे रे ॥